* ओ३म् *

गुरुकुलग्रन्थावलिः ।



# बालनीति-कथामाला

गुरुकुलमुख्याधिष्ठातृ-महोदयनिदेशेन

गुरुकुलस्थ पण्डितैः संकलिता ।

नन्दलाल-प्रबन्धेन

काङ्गड़ी गुरुकुल यन्त्रालये

मुद्रिता ।

१९७८ वैक्रमाब्दे ३८ दयानन्दाब्दे

प्रथमावृत्तौ ५०० पुस्तकानि | सन् १९२१ ई० | मूल्यम् ।)

# नीतिकथामाला।

## धर्म्मबुद्धिपापबुद्ध्योः

### कथा (१)

१. कस्मिंश्चिदधिष्ठाने, धर्मबुद्धिःपापबुद्धिश्च, द्वे मित्रे प्रतिवसतः स्म। अथ कदाचित् पापबुद्धिना चिन्तितम्, "अहं तावत् मूर्खो दारिद्र्योपेतश्च। तदेनं धर्मबुद्धिमादाय, देशान्तरं गत्वा, अस्याश्रयेण अर्थोपार्जनं कृत्वा, एनमपि वञ्चयित्वा, सुखी भवामि"।

२. अथान्यस्मिन् अहनि पापबुद्धिः धर्मबुद्धिं प्राह, "भो मित्र! वार्द्धकभावे किं स्वमात्मविचेष्टितं स्मरसि, देशान्तरमदृष्ट्वा कां शिशुजनस्यवार्त्तां कथयिष्यसि।

विद्यां, वित्तं, शिल्पं, तावन्नाप्नोति मानवः सम्यक्।
यावद्व्रजति न भूमौ देशाद्देशान्तरं हृष्टः॥"

३. अथ तस्य तद्वचनमाकर्ण्य प्रहृष्टमनाः तेनैव सह गुरुजनानुज्ञातः शुभेऽहनि देशान्तरं प्रस्थितः। तत्र च धर्म्मबुद्धिप्रभावेण भ्रमता पापबुद्धिना प्रभूततरं वित्तम् आसादितम्। ततश्च द्वावपि तौ प्रहृष्टौ स्वगृहं प्रति औत्सुक्येन निवृत्तौ।

४. अथ स्वस्थानसमीपवर्त्तिना पापबुद्धिना धर्म्मबुद्धिरभिहितः, “भद्र ! न सर्वमेतद्धनं गृहं प्रति नेतुं युज्यते, यतः कुटुम्बिनो बान्धवाश्च प्रार्थयिष्यन्ते तदत्र एव वनगहने क्वापि भूमौ निक्षिप्य किञ्चिन्मात्रमादाय गृहं प्रविशावो, भूयोऽपि प्रयोजने सञ्जाते तन्मात्रं समेत्य अस्मात् स्थानात् नेष्यावः।”

५. तत् आकर्ण्य धर्मबुद्धिराह, “भद्र ! एवं क्रियताम्”। तथा अनुष्ठिते द्वौ अपि तौ स्वगृहं गत्वा सुखेन संस्थितवन्तौ।

६. अथ अन्यस्मिन् अहनि पापबुद्धिर्निशीथेऽटव्यां गत्वा, तत् सर्वं वित्तं समादाय गर्त्तं पूरयित्वा, स्वभवनं जगाम। अथ अन्येद्युः धर्मबुद्धिं समभ्येत्य प्रोवाच, “सखे ! बहुकुटुम्बा वयं, वित्ताभावात् सीदामः। तद्गत्वा तत्र स्थाने किञ्चिन्मात्रं धनमानयावः। सोऽब्रवीत्, “भद्र ! एवं क्रियताम्”।

७. अथ द्वावपि गत्वा तत् स्थानं यावत् खनतस्तावत् रिक्तं भाण्डं दृष्टवन्तौ। अत्रान्तरे पापबुद्धिः शिरस्ताड़यन् प्रोवाच, “भो धर्मबुद्धे ! त्वया हृतमेतद्धनं, न अन्येन, यतो भूयोऽपि गर्त्तापूरणं कृतं, तत् प्रयच्छ मे तस्यार्द्धम्, अन्यथाहं राजकुले निवेदयिष्यामि”। स आह “भो दुरात्मन् ! मैवं वद धर्मबुद्धिः खल्वहम्। नैतच्चौरकर्म करोमि। उक्तञ्च,

मातृवत् परदाराणि, परद्रव्याणि लोष्टवत्,
आत्मवत् सर्वभूतानि वीक्षन्ते धर्मबुद्धयः”॥

८. एवं द्वावपि तौ विवदमानौ धर्माधिकारिणं गतौ प्रोचतुश्च परस्परं दूषयन्तौ। अथ धर्माधिकरणाधिष्ठितपुरुषैः दिव्यार्थे यावन्नियोजितौ तावत् पापबुद्धिराह, "अहो ! न सम्यग्दृष्टोऽयं न्यायः, तदत्र विषये मम वृक्षदेवताः साक्षीभूताः तिष्ठन्ति। ता अपि आवयोरेकतरं चौरं साधुं वा करिष्यन्ति"। अथ तैः सर्वैरभिहितम्, "भोः युक्तमुक्तं भवता ! तदस्माकमपि अत्र विषये महत् कौतूहलं वर्त्तते। प्रत्यूषसमये युवाभ्यामप्यस्माभिः सह तत्र वनोद्देशे गन्तव्यमिति"।

९. एतस्मिन्नन्तरे पापबुद्धिः स्वगृहं गत्वा स्वजनकमुवाच "तात ! प्रभूतोऽयं मयाऽर्थो धर्म्मबुद्धेश्चोरितः, स च तव वचनेन परिणतिं गच्छति, अन्यथा ऽस्माकं प्राणैः सह यास्यति"। स आह, "वत्स ! द्रुतं वद, येन प्रोच्य तद्द्रव्यं स्थिरतां नयामि" पापबुद्धि राह, "तात ! अस्ति तत्प्रदेशे महाशमी, तस्यां महत्कोटरमस्ति, तत्र त्वं साम्प्रतमेव प्रविश, ततःप्रभाते यदाहं सत्यश्रावणं करोमि, तदा त्वया वाच्यं, यद्‌ धर्म्मबुद्धिश्चौर इति"।

१०. तथा अनुष्ठिते प्रत्यूषे स्नात्वा पापबुद्धिः धर्म्मबुद्धि पुरःसरो धर्माधिकरणिकैः सह तां शमीमभ्येत्य तारस्वरेणप्रोवाच "भगवति वनदेवते ! आवयोर्मध्ये यश्चौरः तं कथय।" अथ पापबुद्धिपिता शमीकोटरस्थः प्रोवाच, "भोः ! शृणुत, धर्म्मबुद्धिना हृतमेतद्धनम्" तदाकर्ण्य सर्वे ते राजपुरुषा विस्मयोत्फुल्ललोचना यावद्धर्म्मबुद्धेः वित्तहरणोचितं निग्रहं

शाखदृष्ट्या अवलोकयन्ति; तावद्धर्म्मबुद्धिना तच्छमीकोटरं वह्नि भोज्यद्रव्यैः परिवेष्ट्य वह्निना सन्दीपितम् ।

११. अथज्वलति तस्मिन् शमीकोटरेऽर्द्ध दग्धशरीरः स्फुटितेक्षणः करुणं परिदेवयन् पापबुद्धिपिता निश्चक्राम । ततश्च तैः सर्वैः पृष्टः "भोः ! किमिदम्?" इत्युक्ते स पापबुद्धिविचेष्टितं सर्वमिदं निवेद्योपरतः ।

अथ ते राजपुरुषाः पापबुद्धिं शमीशाखायां प्रतिलम्ब्य धर्म्मबुद्धिं प्रशस्येदमूचुः, "अहो ! साध्विदमुच्यते—

'उपायं चिन्तयेत् प्राज्ञस्तथापायं च चिन्तयेत्,"' ।

धर्मबुद्धिः कुबुद्धिश्च द्वावेतौ विदितौ मम ।
पुत्रेण व्यर्थपाण्डित्यात् पिता पापेन घातितः ॥४॥

---

## वक नकुलयोः

### कथा ( २ )

१. अस्ति कस्मिंश्चिद्वनोद्देशे बहुवकसनाथो वटपादपः । तस्य कोटरे कृष्णसर्पः प्रतिवसति स्म । स च वकबालकानजातपक्षानपि सदैव भक्षयन् कालं नयति ।

२. अथैको वकस्तेन भक्षितान्यपत्यानि दृष्ट्वा शिशुवैराग्यात् सरस्तीरमासाद्य वाष्पपूरपूरितनयनः अधोमुखस्तिष्ठति । तञ्च तादृक्चेष्टितमवलोक्य कुलीरकः प्रोवाच, "माम ! किमेवं रुद्यते

भवताऽद्य" स आह, "भद्र! किं करोमि, मम मन्दभाग्यस्य बालकाः कोटरनिवासिना सर्पेण भक्षिताः तद्दुःखदुःखितोऽहं रोदिमि, तत् कथय मे यद्यस्ति कश्चिदुपायः तद्विनाशाय"।

३. तदाकर्ण्य कुलीरकः चिन्तयामास। "अयं तावत् अस्मज्जातिसहजवैरी, तथोपदेशं प्रयच्छामि सत्यानृतं, यथान्येऽपि बकाः सर्वे संक्षयमायान्ति।"

४. आह च "माम! यद्येवं तर्हि, मत्स्यमांसखण्डानि नकुलस्य बिलद्वारात् सर्पकोटरं यावत् प्रक्षिप, यथा नकुलस्तन्मार्गेण गत्वा तं दुष्टसर्पं विनाशयति"।

५. अथ तथा अनुष्ठिते मत्स्यमांसानुसारिणा नकुलेनतं कृष्णसर्पं निहत्य, तेऽपि तद्वृक्षाश्रयाः सर्वे बकाश्च, शनैःशनैर्भक्षिताः।

---

## नृपवानरयोः

### कथा ( ३ )

१. कस्यचित् राज्ञो नित्यं वानरोऽतिभक्तिपरोऽङ्गसेवकोऽन्तःपुरेऽप्यप्रतिषिद्धप्रसरोऽतिविश्वासस्थानमभूत्। एकदा राज्ञोनिद्रां गतस्य, वानरे व्यजनं नीत्वा वायुं विदधति, राज्ञो वक्षःस्थलोपरि मक्षिका उपविष्टा। व्यजनेन मुहुर्मुहुर्निषिध्यमानापि, पुनःपुनः तत्रैव उपविशति।

२. ततः तेन स्वभावचपलेन मूर्खेण वानरेण क्रुद्धेन सता, तीक्ष्णं खड्गमादाय, तस्योपरि प्रहारो विहितः। ततो मक्षिका उड्डीय गता; तेन शितधारेण असिना राज्ञो वक्षो द्विधा जातं राजा मृतश्च। तस्मात् चिरायुरिच्छता केनापि मूर्खोऽनुचरो न रक्षणीयः।

३. अपरमेकस्मिन्नगरे कोऽपि विप्रो महाविद्वान्, परं पूर्वजन्मप्रयोगेन चौरो वर्त्तते। स तस्मिन् पुरेऽन्यदेशादागतान् चतुरो विप्रान् बहूनि वस्तूनि विक्रीणतो दृष्ट्वा चिन्तितवान्, "अहो! केनोपायेन एषां धनं लभे" इति विचिन्त्य तेषां पुरोऽनेकानि शास्त्रोक्तानि सुभाषितानि, अतिप्रियाणि मधुराणि वचनानि च जल्पतो तेषां मनसि विश्वासमुत्पाद्य, सेवा कर्त्तुमारब्धा।

४. अथ तस्मिन् सेवां कुर्वति, तै विप्रैः सर्ववस्तूनि विक्रीय बहुमूल्यानि रत्नानि क्रीतानि। ततः तानि जङ्घामध्ये तत्समक्षं प्रक्षिप्य स्वदेशं प्रति गन्तुमुद्यमो विहितः। ततः स धूर्त्तविप्रस्तान् विप्रान् गन्तुमुद्यतान् प्रेक्ष्य चिन्ताव्याकुलितमनाः सञ्जातः। "अहो! धनमेतत् न किञ्चित् मया ~~चोरितम्~~ चोरितम् (प्राप्तम्)। अथ एभिः सह यामि, पथि क्वापि विषं दत्वा एतान्निहत्य सर्वरत्नानि गृह्णामि"। इति विचिन्त्य तेषामग्रे सकरुणं विलप्य इदमाह, "भोः मित्राणि! यूयं मामेकाकिनं मुक्त्वा गन्तुमुद्यताः तन्मेमनो भवद्भिः सह स्नेहपाशेन बद्धं, भवद्विरहनाम्नैव आकुलं सञ्जातं; यथा धृतिं क्वापि न धत्ते। यूयमनुग्रहं विधाय सहायभूतं मामपि सहैव नयत"

५. तद्वचः श्रुत्वा ते करुणार्द्रचित्ताः तेन सममेव स्वदेशं प्रति प्रस्थिताः। अथाध्वनि तेषां पञ्चानामपि पल्लीपुरमध्ये व्रजतां ध्वांक्षाः कथयितुमारब्धाः, "रे रे किराताः! धावत धावत। सपादलक्षधनिनो यान्ति। एतान् निहत्य धनं नयत"।

६. ततः किरातैः ध्वांक्षवचनमाकर्ण्य सत्वरं गत्वा, ते विप्रा लगुडप्रहारैर्जर्जरीकृत्य, वस्त्राणि मोचयित्वा विलोकिताः, परं धनं किञ्चिन्न लब्धम्। तदा तैः किरातैरभिहितम्। 'भो पान्थाः! पुरा कदापि ध्वांक्षवचनमनृतं नासीत्। ततो भवतां सन्निधौ क्वापि धनंविद्यते। तदर्पयत, अन्यथा सर्वेषामपि वधं विधाय, चर्म विदार्य, प्रत्यङ्गं प्रेक्ष्य, धनं नेष्यामः'।

७. तदातेषामीदृशं वचनमाकर्ण्य चौरविप्रेण मनसि चिन्तितम् "यदा एषां विप्राणां वधं विधाय अङ्गं विलोक्य रत्नानि नेष्यन्ति, तदाऽपि मां हनिष्यन्ति। ततोऽहं पूर्वमेवात्मानमरत्नं समर्प्य एतान् मुञ्चामि।

उक्तञ्च,

मृत्योर्बिभेषि किं बाल! न स भीतं विमुञ्चति।
अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः॥"

इति निश्चित्य अभिहितम्, "भोः किराताः! यदि एवं ततो मां पूर्वं निहत्यविलोकयत"।

८. ततस्तैः यथानुष्ठिते तं धनरहितमवलोक्य अपरे चत्वारोऽपि मुक्ताः। तदुक्तम्—

पण्डितोऽपि वरं शत्रुर्न मूर्खो हितकारकः ।
वानरेण हतोराजा विप्राश्चौरेण रक्षिताः ॥ ५ ॥

## बुद्धि बलयोः

### कथा ( ४ )

१. कस्मिंश्चिद्वने भासुरको नाम सिंहः प्रतिवसतिस्म । अथासौ वीर्यातिरेकात् नित्यमेव अनेकान् मृगशशकादीन् जन्तून् व्यापादयन् नोपरराम ।

२. अथान्येद्युस्तद्वनजाः सर्वे सारङ्गवराहमहिषशशकादयो मिलित्वा तमभ्युपेत्य प्रोचुः, "स्वामिन् ! किमनेन सकलमृगवधेन ? नित्यमेव यतस्तव एकेनापि मृगेण तृप्तिर्भवति । तत् क्रियतामस्माभिः सह समयधर्म्मः ।

३. "अद्य प्रभृति तवात्रोपविष्टस्य जातिक्रमेण प्रतिदिनमेको मृगो भक्षणार्थं समेष्यति । एवं कृते तव तावत् प्राणयात्रा, क्लेशं विनापि भविष्यति, अस्माकञ्च पुनः सर्वोच्छेदनं न स्यात् । तदेष राजधर्मोऽनुष्ठीयताम् ।

लोकानुग्रहकर्त्तारः प्रवर्द्धन्ते नरेश्वराः ।
लोकानां संक्षयाच्चैव क्षयं यान्ति न संशयः" ॥

४. अथ तेषां तद्वचनमाकर्ण्य भासुरक आह, "अहो ! सत्यमभिहितं भवद्भिः । परं यदि ममोपविष्टस्यात्र नित्यमेव नैकः श्वापदः समागमिष्यति, तन्नूनं सर्वानपि भक्षयिष्यामि" ।

५. अथ ते तथैव प्रतिज्ञाय निर्वृतिभाजः तत्रैव वने निर्भयाः पर्य्यटन्ति। एकश्च प्रतिदिनं क्रमेण याति; वृद्धो वा, वैराग्ययुक्तो वा, शोकग्रस्तो वा, पुत्रकलत्रनाशभीतो वा, तेषां मध्यात् तस्य भोजनार्थं मध्याह्नसमये उपतिष्ठते।

६. अथ कदाचित् जातिक्रमाच्छशकस्यावसरः समायातः। स समस्तमृगैः प्रेरितोऽनिच्छन्नपि मन्दं मन्दं गत्वा, तस्य वधोपायं चिन्तयन्, वेलातिक्रमं कृत्वा, व्याकुलितहृदयो यावद्ध गच्छति, तावन् मार्गे गच्छता कूपः संदृष्टः। यावत् कूपोपरि याति, तावत् कूपमध्ये आत्मनः प्रतिबिम्बं ददर्श, दृष्ट्वा च तेन हृदये चिचिन्ततं, यद्भव्य उपायोऽस्ति, अहं भासुरकं प्रकोप्य स्वबुद्ध्या अस्मिन् कूपे पातयिष्यामि।

७. अथासौ दिनशेषे भासुरकसमीपं प्राप्तः। सिंहोऽपि वेलातिक्रमेण क्षुत्क्षामकण्ठः कोपाविष्टः सृक्कणी परिलेलिहत् व्यचिन्तयत्। "अहा! प्रातराहाराय निःसत्त्वं वनं मया कर्त्तव्यम्"। एवं चिन्तयतस्तस्य शशको मन्दं मन्दं गत्वा प्रणम्य तस्याग्रे स्थितः।

८. अथ तं प्रज्वलितात्मा भासुरको भर्त्सयन्नाह, "रे शशकाधम! एकतस्तावत् त्वं लघुः प्राप्तोऽपरतश्च वेलातिक्रमेण, तदस्मादपराधात् त्वां निपात्य, प्रातः सकलान्यपि मृगकुलानि उच्छेदयिष्यामि'।

९. अथ शशकः सविनयं प्रोवाच 'स्वामिन्! नापराधो मम न चापरेषां सत्त्वानाम्, तत् श्रूयतां कारणम्। सिंह आह,

"सत्वरं निवेदय, यावत् मम दंष्ट्रान्तर्गतो न भवान् भविष्यतीति"। शशक आह, "स्वामिन्! समस्तमृगैरद्य जातिक्रमेण मम लघुतरस्य प्रस्तावं विज्ञाय ततोऽहं पञ्चशशकैः समं प्रेषितः।

१०. "ततश्च अहमागच्छन् अन्तराले महता केनचिदपरेण सिंहेन विवरान्निर्गत्य अभिहितः। 'रे! क्व प्रस्थिता यूयम्? अभीष्टदेवतांस्मरत'। ततोमयाभिहितम्, 'वयं स्वामिनो भासुरकसिंहस्य सकाशे आहारार्थं समयधर्मेण गच्छामः'। ततः तेनाभिहितम्, 'यद्येवं तर्हि मदीयमेतद्वनं, मया सह समयधर्मेण समस्तैरपि श्वापदैर्वर्तितव्यम्। चौररूपी स भासुरकः। अथ यदि सोऽत्र राजा ततो विश्वासस्थाने चतुरः शशकानत्र धृत्वा तमाहूय द्रुततरमागच्छ, येन यः कश्चिदावयोर्मध्यात् पराक्रमेण राजा भविष्यति स सर्वानेतान भक्षयिष्यतीति'। ततोहं तेनादिष्टः स्वामिसकाशमभ्यागतः, एतत् वेलाव्यतिक्रमकारणम्, तदत्र स्वामी प्रमाणम्"।

११. तच्छ्रुत्वा भासुरक आह, 'भद्र! यदि एवं, तत् सत्वरंदर्शय मे तं चौरसिंहम्, येनाहं मृगकोपं तस्योपरि क्षिप्त्वा स्वस्थो भवामि'। शशक आह, "स्वामिन् सत्यमिदं, स्वभूमिहेतोः परिग्रहाद्व युध्यन्ते क्षत्रियाः, परं स दुर्गाश्रयः, दुर्गान्निष्क्रम्य वयं तेन विष्कम्भिताः, दुर्गस्थश्च दुःसाध्यो भवति रिपुः"। भासुरक आह, "भोः! किं तव अनेन व्यापारेण, दर्शय मे तं दुर्गस्थमपि"। अथ शशक आह, "यद्येव तर्हि आगच्छतु स्वामी"।

१२. एवमुक्त्वा अग्रे प्रस्थितः। ततश्च तेन आगच्छता

यः कूपो दृष्टोऽभूत् तमेव कूपमासाद्य भासुरकमाह । "स्वामिन्! कस्ते प्रतापं सोढुं समर्थः। त्वां दृष्ट्वा दूरतोऽपि चौरसिंहः प्रविष्टः स्वं दुर्गम्, तदागच्छ येन दर्शयामीति"। भासुरक आह, "दर्शय मे दुर्गम्"। तदनु दर्शितस्तेन कूपः। ततः सोऽपि मूर्खः सिंहः कूप मध्ये आत्मप्रतिविम्बं जलमध्यगतं दृष्ट्वा सिंहनादं मुमोच। ततः प्रतिशब्देन कूपमध्याद्द्विगुणतरो नादः समुत्थितः।

१३. अथ तेन तं शत्रुं मत्वा आत्मानं तस्योपरि प्रक्षिप्य प्राणाः परित्यक्ताः। शशकोऽपि हृष्टमनाः सर्वमृगान् आनन्द्य तैः सह प्रशस्यमानो यथासुखं तत्र वने निवसति स्म। अत एवोक्तम्—

यस्य बुद्धिर्बलं तस्य निर्बुद्धेस्तु कुतोबलम्।
पश्य सिंहो मदोन्मत्तः शशकेन विनाशितः॥

---

## अनागतविधात्रादीनां।

### कथा ( ५ )

१. कस्मिंश्चित् जलाशये अनागतविधाता प्रत्युत्पन्नमतिः यद्भविष्यश्चेति त्रयो मत्स्याः सन्ति। अथ कदाचित् तं जलाशयं दृष्ट्वा गच्छद्भिर्मत्स्यजीविभिरुक्तं, यदहो! बहुमत्स्योऽयं ह्रदः, कदाचिदपि नास्माभिरन्वेषितः, तदद्य तावद्वाहारवृत्तिः

सञ्जाता, सन्ध्यासमयश्च संवृत्तः, ततः प्रभातेऽत्र आगन्तव्यमिति निश्चयः।

२. अतस्तेषां तत्कुलिशपातोपमं वचः समाकर्ण्य अनागतविधाता सर्वान् मत्स्यान् आहूय इदमूचे, "अहो! श्रुतं भवद्भिः यत् मत्स्यजीविभिरभिहितम्? तन्नूनं प्रभातसमये मत्स्यजीविनोऽत्र समागम्य मत्स्यसंक्षयं करिष्यन्ति, एतन्मम मनसि वर्त्तते। तन्न युक्तं साम्प्रतं क्षणमपि अत्रावस्थातुम्। उक्तञ्च,

विद्यमाना गतिर्येषामन्यत्रापि सुखावहा।
ते न पश्यन्ति विद्वांसो देहभङ्गं कुलक्षयम्" ॥

३. तदाकर्ण्य प्रत्युत्पन्नमतिः प्राह, "अहो! सत्यमभिहितं भवता, ममापि अभीष्टमेतत्, तदन्यत्र गम्यतामिति। उक्तञ्च,

परदेशभयाद्भीता बहुमाया नपुंसकाः।
स्वदेशे निधनं यान्ति काकाः कापुरुषा मृगाः" ॥

४. अथ तत् समाकर्ण्य प्रोच्चैर्विहस्य यद्भविष्यः प्रोवाच,—"अहो! न भवद्भ्यां मन्त्रितं सम्यगेतदिति। यतः, किं वाङ्मात्रेणैव तेषां पितृपैतामहिकमेतत्सरः त्यक्तुं युज्यते? यदि आयुःक्षयोऽस्ति, तदन्यत्र गतानामपिमृत्युर्भविष्यत्येव। उक्तञ्च,

अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति।

तदहं न यास्यामि, भवद्भ्यां च यद्रोचते तत् कर्त्तव्यम्"।

५. अथ तस्य तं निश्चयं ज्ञात्वा, अनागतविधाताप्रत्युत्पन्नमतिश्च, निष्क्रान्तौ सह परिजनेन । अथ प्रभाते तैर्मत्स्यजीविभिः जालैस्तज्जलाशयमालोड्य यद्भविष्येण सह तत्सरो निर्मत्स्यतां नीतम् । अतएवोक्तम्—

अनागतविधाताच प्रत्युत्पन्नमतिस्तथा ।
द्वावेतौसुखमेधेते, यद्भविष्यो विनश्यति ॥

---

## चण्डरवश्वापदानाम्

### कथा ( ६ )

१. कस्मिंश्चित् वनप्रदेशे चण्डरवो नाम शृगालःप्रतिवसतिस्म । स कदाचित् क्षुधाविष्टो जिह्वालौल्यात् नगरान्तरं प्रविष्टः । अथ तं नगरवासिनः सारमेया अवलोक्य, सर्वतः शब्दायमानाःपरिधाव्य, तीक्ष्णदंष्ट्राग्रैर्भक्षितुमारब्धाः । सोऽपि तैः भक्ष्यमाणः प्राणभयात् प्रत्यासन्नरजकगृहं प्रविष्टः ।तत्र च नीलीरसपरिपूर्णमहाभाण्डं सज्जीकृतमासीत् । तत्र सारमेयैराक्रान्तो भाण्डमध्ये पतितः ।

२. अथयावत् निष्क्रान्तस्तावत् नीलीवर्णः सञ्जातः । तत्र अपरे सारमेयास्तं शृगालमजानन्तो यथाभीष्टदिशं जग्मुः । चण्डरवोऽपि दूरतरं प्रदेशमासाद्य काननाभिमुखं प्रतस्थे । न च नीलवर्णेन कदाचित् निजरङ्गः त्यज्यते ।

३. अथ अपूर्वं तत् सत्वम् अवलोक्य, सर्वे सिंहव्याघ्रद्वी-

पिष्टकप्रभृतयः अरण्यनिवासिनः भयेन व्याकुलितचित्ताः समन्तात् पलायनं कुर्वन्ति, कथयन्ति च, "न ज्ञायते अस्य कीदृक् विचेष्टितं पौरुषं च, तत् दूरतरं गच्छामः ।

न यस्य चेष्टितं विद्यात्, न कुलं, न पराक्रमम् ।
न तस्य विश्वसेत् प्राज्ञो, यदीच्छेच्छ्रियमात्मनः" ॥

४. चण्डरवोऽपि तान् भयेन व्याकुलितान् विज्ञाय, इदमाह, "भोः भोः श्वापदाः ! किं यूयं मां दृष्ट्वा एव सन्त्रस्ताः व्रजथ ? तत् न भेतव्यम् । अहं ब्रह्मणा अद्य स्वयमेव सृष्ट्वा अभिहितः— श्वापदानां मध्ये कश्चित् राजा नास्ति तत् त्वं मया अत्र सर्वेषां श्वापदानाम् प्रभुत्वे अभिषिक्तः ककुद्द्रुमाभिधः । ततः गत्वा क्षितितले तान् सर्वान् परिपालय'—ततः अहम् अत्र आगतः । तत् मम छत्रच्छायायां सर्वैः एव श्वापदैः वर्तितव्यम् । अह ककुद्द्रुमो नाम राजा त्रैलोक्येऽपि सञ्जातः ।"

५. तत् श्रुत्वा, सिंहव्याघ्रपुरःसराः श्वापदाः "स्वामिन् ! प्रभो ! समादिश" इति वदन्तः तं परिवव्रुः । अथ, तेन सिंहस्य अमात्यपदवी प्रदत्ता । व्याघ्रस्य शय्यापालित्वं, द्वीपिनः ताम्बूलाधिकारः, वृकस्य द्वारपालकत्वम् । ये च आत्मीयाः शृगालाः, तैः सह आलापमात्रम् अपि न करोति । सर्वे अपि शृगालाः अर्धचन्द्रं दत्त्वा निस्सारिताः ।

६. एवं तस्य राज्यक्रियायां वर्तमानस्य, ते सिंहादयः मृगान् व्यापाद्य, तस्य पुरतः प्रक्षिपन्ति । सोऽपि प्रभुधर्म्मेण सर्वेषाम्,

तान् प्रविभज्य प्रयच्छति । एवं गच्छति काले, कदाचित् तेन समागतेन, दूरदेशे शब्दायमानस्य शृगालवृन्दस्य कोलाहलः अश्रावि । तं शब्दं श्रुत्वा पुलकिततनुः, आनन्दाश्रुभिः परिपूर्ण-नयनः उत्थाय विरोतुम् आरब्धवान् ।

७. अथ ते सिंहादयः तं तारस्वरं श्रुत्वा "शृगालोऽयम्" इति मत्वा सलज्जम् अधोमुखाः क्षणम् एकं स्थित्वा मिथः प्रोचुः "भोः ! वञ्चिताः वयम् अनेन क्षुद्रशृगालेन" तत् वध्यताम् । सोऽपि तत् आकर्ण्य पलायितुम् इच्छन् तत्र स्थाने एव सिंहादि-भिः खण्डशः कृतः, मृतश्च ।

त्यक्ताश्चाभ्यन्तरा येन बाह्याश्चाभ्यन्तरीकृताः
स एव मृत्युमाप्नोति, यथा राजा ककुद्द्रुमः ॥

---

## मित्रशर्म्मणो धूर्त्तानाञ्च ।

### कथा ( ७ )

१. कस्मिंश्चित् अधिष्ठाने मित्रशर्म्मा नाम ब्राह्मणः कृता-ग्निहोत्रपरिग्रहः प्रतिवसतिस्म । तेन कदाचित् माघमासे, मेघा-च्छादिते गगने, मन्दं मन्दं प्रवर्षति मेघे, पशुप्रार्थनाय किञ्चिद्‌ ग्रामान्तरं गत्वा कश्चित् यजमानो याचितः । "भो यजमान ! आगामिन्याम् अमावास्यायाम् अहं यक्ष्यामि यज्ञम् । तद्‌ देहि

मे पशुम्" । अथ तेन तस्य पीवरतनुः पशुः दत्तः । सोपि तम् इतश्च इतश्च गच्छन्तं विज्ञाय स्कन्धे कृत्वा स्वपुराभिमुखः प्रतस्थे ।

२. अथ तस्य गच्छतो मार्गे त्रयो धूर्त्ताः सम्मुखाः बभूवुः । तैश्च तादृशं पीवरतनुं पशुम् अवलोक्य मिथः अभिहितम्, "अहो ! अस्य पशोः भक्षणात् अद्यतनीयो हिमपातः अपनीयते । तत् एनं वंचयित्वा पशुम् आदाय शीतत्राणं कुर्मः ।"

३. अथ तेषाम् एको वेशपरिवर्तनं विधाय सम्मुखं भूत्वा तम् आहिताग्निम् ऊचे, "भो भो बालाग्निहोत्रिन् ! किम् एवं जनविरुद्धं हास्यकार्य्यं क्रियते, यत् एष सारमेयः अपवित्रः स्कन्धेन नीयते" । ततश्च तेन कोपाभिभूतेन अभिहितम्, "अहो ! किम् अंधो भवान्, यत्पशुं सारमेयं प्रतिपादयसि ?" सोऽब्रवीत् "ब्रह्मन् ! कोपस्त्वया न कर्त्तव्यः । यथेच्छं गम्यताम्" ।

४. अथ, यावत् किञ्चित् अध्वनोऽन्तरं गच्छति, तावत् द्वितीयो धूर्त्तः सम्मुखे समुपेत्य तम् उवाच, "भो ब्रह्मन् ! यद्यपि वल्लभोऽयं ते मृतवत्सः, तथापि स्कन्धम् आरोपयितुम् अयुक्तम्" । अथ, असौ सकोपम् इदमाह, "भोः ! किम् अंधो भवान्, यत् पशुं मृतवत्सं वदसि" । सोऽब्रवीत्, "भगवन् ! मा कोपं कुरु । अज्ञानात् मया अभिहितम् । तत् त्वं यथेच्छम् आचर" ।

५. अथ, यावत् स्तोकं वनांतरं गच्छति, तावत् तृतीयो अन्यवेशधारी धूर्त्तः सम्मुखे समुपेत्य तम् उवाच, "भोः ! अ-

युक्तम् एतत्, यत् त्वं रासभं स्कंधाधिरूढं नयसि; तत् त्यज्यताम् एषः । उक्तञ्च—

'यः स्पृशेद्रासभं मर्त्यो ज्ञानादज्ञानतोऽपि वा ।
सचैलं स्नानमुद्दिष्टं, तस्य पापप्रशांतये' ॥
तत् त्यज एनम्, यावत् अन्यः कश्चित् न पश्यति" ।

६. अथ, असौ तं पशुं रासभं मन्यमानो, भयात् भूमौ प्रक्षिप्य, स्वगृहम् उद्दिश्य, प्रपलायितः । ततस्ते त्रयो मिलित्वा तं पशुम् आदाय यथेच्छया भक्षितुम् आरब्धाः ।

बहुबुद्धिसमायुक्ताः सुविज्ञाना, बलोत्कटान्
शक्ता वञ्चयितुं धूर्त्ताः; ब्राह्मणं छागलादिव ॥

---

## दधिपुच्छखरनखरयोः

### कथा ( ८ )

१. कस्मिंश्चित् वने खरनखरो नाम सिंहः प्रतिवसतिस्म । स कदाचित् इतश्च इतश्च परिभ्रमन्, क्षुधया पीडितः नकिञ्चिदपि सत्वम् आससाद । ततश्च अस्तमनसमये महतीं गिरिगुहाम् आसाद्य प्रविष्टः चिन्तयामास, "नूनम् एतस्यां गुहायां रात्रौ केनापि सत्त्वेन आगन्तव्यम् । तत् निस्तब्धो भूत्वा तिष्ठामि ।"

२. एतस्मिन् अंतरे तस्याः स्वामी दधिपुच्छो नाम शृगालः समायातः । स च यावत् पश्यति, तावत् सिंहस्य पद्पद्धतिः

गुहायां प्रविष्टा, नच निर्गता। ततश्च अचिंतयत्, अहो ! विनष्टोऽस्मि। नूनम् अस्या अंतर्गतेन सिंहेन भाव्यम्। तत् किं करोमि ? कथं ज्ञास्यामि ?"

३. एवं विचिन्त्य द्वारस्थः फूत्कर्तुम् आरेभे, "अहो बिल ! अहो बिल !" इत्युक्त्वा तूष्णींभूय, भूयः अपि तथा एव प्रत्यभाषत् "भोः किं न स्मरसि, यत् मया त्वया सह समयः कृतोऽस्ति, यत् मया बाह्यात् समागतेन त्वं वक्तव्यः, त्वया च अहं प्रतिवक्तव्यः। तत् यदि मां न आह्वयसि, ततोऽहं द्वितीयं बिलं यास्यामि।"

४. अथ तच्छ्रुत्वा सिंहः चिन्तितवान, "नूनम् एषा गुहा अस्य समागतस्य सदा समाह्वानं करोति। परम्, अद्य मम भयात् न किञ्चिद्व ब्रूते। अथवा साधु इदमुच्यते,

'भयसन्त्रस्तमनसां हस्तपादादिकाः क्रियाः।
प्रवर्तन्ते न, वाणीच, वेपथुश्चाधिको भवेत्॥'

तत् अहम् अस्य आह्वानं करोमि, येन, तदनुसारेण प्रविष्टोऽयं भोज्यतां यास्यति।" एवं सम्प्रधार्य्य, सिंहः तस्य आह्वानम् अकरोत्।

५. अथ, सिंहस्य शब्देन सा गुहा प्रतिरवसम्पूर्णा अन्यान् अपि दूरस्थान् अरण्यजीवान् त्रासयामास। शृगालोऽपि पलायमान इमं श्लोकम् अपठत्।

"अनागतं यः कुरुते स शोभते
स शोच्यते यो न करोत्यनागतम् ।
वनेऽत्र संस्थस्य समागता जरा
बिलस्य वाणी न कदापि मे श्रुता ॥"

---

## सिंहसुतयोः शृगालकस्य च

### कथा ( ८ )

१. कस्मिंश्चित् वने सिंहदम्पती प्रतिवसतःस्म । अथ सिंही पुत्रद्वयं अजीजनत् । सिंहोऽपि नित्यम् एव मृगान् व्यापाद्य सिंह्यै ददाति । अथ, अन्यस्मिन्अहनि तेन किमपि न आसादितम् । वने भ्रमतोऽपि तस्य रविः अस्तं गतः ।

२, अथ, तेन स्वगृहम् आगच्छता शृगालशिशुः प्राप्तः । स च "बालकोऽयम्" इति अवधार्य, यत्नेन दंष्ट्रामध्यगतं कृत्वा, सिंह्याः जीवन्तम् एव समर्पितवान् । ततः सिंह्या अभिहितम्, "भोः कान्त ! त्वया आनीत किञ्चित् अस्माकं भोजनम् ?" सिंह आह, "प्रिये ! मया अद्य एनं शृगालशिशुं परित्यज्य न किञ्चित् सत्वम् आसादितम् । स च "बालोऽयम्" इति मत्वा न व्यापादितः, विशेषात् स्वजातीयश्च । इदानीं त्वम् एनं भक्षयित्वा पथ्यं कुरु,प्रभाते अन्यत् किञ्चित् उपार्जयिष्यामि ।"

३. सा प्राह, "भोः कान्त ! त्वया बालकोऽयं विचिन्त्य

न हतः। तत् कथम् एनम् अहं स्वोदरार्थे विनाशयामि ।
उक्तश्च

'अकृत्यं नैव कर्तव्यम्, प्राणत्यागेऽपि संस्थिते।
न च कृत्यं परित्याज्यम्, एष धर्म्मः सनातनः ।।'

तस्मात् मम अयं तृतीयः पुत्रो भविष्यति ।" इत्येवम् उक्त्वा तमपि स्वस्तनक्षीरेण पराम् पुष्टिम् अनयत् एवं ते त्रयोऽपि शिशवः परस्परं जातिम् अजानन्तः एकाचारविहारा बाल्यसमयं निर्वाहयन्ति ।

४. अथ, कदाचित् तत्र वने भ्रमन् अरण्यगजः समायातः। तं दृष्ट्वा तौ सिंहसुतौ द्वौ अपि कुपिताननौ तम् प्रति यावत् प्रचलितौ, तावत्, तेन शृगालसुतेन अभिहितम्, "अहो ! गजोऽयं युष्माकं कुलशत्रुः, तन्न गन्तव्यम् एतस्य अभिमुखम् ।" एवम् उक्त्वा गृहं प्रधावितः। तौ अपि ज्येष्ठबान्धवस्य भङ्गात् निरुत्साहतां गतौ ।

५. अथ, तौ द्वौ अपि गृहं प्राप्य पित्रोः अग्रतो विहसन्तौ ज्येष्ठस्य भ्रातुः विचेष्टितम् ऊचतुः, यद् "गजं दृष्ट्वा दूरतोऽपि नष्टः ।" सोऽपि तत् आकर्ण्य कोपाविष्टमना ताम्रलोचनः भृकुटिं बद्ध्वा, तौ भर्त्सयन् परुषतराणि वचनानि उवाच । ततः सिंह्या एकान्ते नीत्वा असौ प्रबोधितः, "वत्स ! मा एवं कदाचित् जल्प । एतौ भवदीयौ लघुभ्रातरौ ।"

६. अथ असौ प्रभूतकोपाविष्टः ताम् उवाच, "किम् अहम्

एताभ्यां शौर्य्येण, रूपेण, विद्याभ्यासेन कौशलेन वा हीनः ? येन माम् उपहसतः । तत् मया अवश्यम् एतौ व्यापादनीयौ ।” तत् आकर्ण्य तस्य जीवितम् इच्छन्ती अन्तर्विहस्य प्राह,

“शूरोऽसि, कृतविद्योऽसि दर्शनीयोऽसि, पुत्रक ।
यस्मिन् कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ॥

७. तत् सम्यक् शृणु वत्स, त्वं शृगालीसुतः । कृपया मया स्वस्तनक्षीरेण पुष्टिं नीतः । तत् यावत् एतौ मम पुत्रौ शिशुत्वात् त्वां शृगालं न जानीतः, तावत् द्रुततरं गत्वा स्वजातीयानां मध्ये भव । नोचेत्, आभ्यां हतो मृत्युपथं समेष्यसि ।”

८. सोऽपि तस्या वचनं श्रुत्वा भयेन व्याकुलमनाःशनैः शनैः अपसृत्य स्वजात्या मिलितः ।

---

## घण्टोष्ट्रस्य

### कथा ( १० )

१. कस्मिंश्चित् अधिष्ठाने उज्ज्वलको नाम रथकारः प्रतिवसतिस्म । स च अतीव दारिद्र्योपहतः चिन्तितवान्, “अहो धिक्, इयं दरिद्रता अस्माकं गृहे ! यतः, सर्वोऽपि जनः स्वकर्मणि रतः तिष्ठति । अस्माकं पुनः व्यापारो न अत्र अधिष्ठाने अर्हति । यतः, सर्वेषां लोकानां चिरन्तनाः चतुर्भूमिकाः गृहाः

सन्ति। मम च न अत्र। तत् किं मदीयेन रथकारत्वेन प्रयोजनम्?" इति चिन्तयित्वा देशात् निष्क्रान्तः।

२. यावत् किञ्चित् वनं गच्छति, तावत् वनमध्ये सूर्यास्तमनवेलायां स्वयूथात् भ्रष्टाम्, प्रसववेदनया पीड्यमानाम् उष्ट्रीमपश्यत्। स च दासेरकेण युक्ताम् उष्ट्रीं गृहीत्वा स्वस्थानाभिमुखः प्रस्थितः। गृहम् आसाद्य रज्जुकां गृहीत्वा ताम् उष्ट्रिकां बबन्ध।

३. ततश्च तीक्ष्णं परशुम् आदाय, तस्याः कृते पल्लवानाम् आनयनार्थं पर्वतस्य एकदेशे गतः। तत्र च नूतनानि, कोमलानि, बहूनि पल्लवानि छित्त्वा शिरसि आरोप्य, तस्या अग्रे निचिक्षेप। तया च तानि शनैः शनैः भक्षितानि। पश्चात् पल्लवानां भक्षणात् अहर्निशं पीवरतनुः उष्ट्रीसञ्जाता। सोऽपि दासेरको महान् उष्ट्रः सञ्जातः स नित्यम् एव दुग्धं गृहीत्वा स्वकुटुम्बं पालयति।

४. अथ रथकारेण, वल्लभत्वात् दासेरकस्य ग्रीवायां महतीघण्टा प्रतिबद्धा। पश्चात् रथकारो व्यचिन्तयत्, "अहो! किम् अन्यैः दुष्कृत कर्मभिः, यावत् मम एतस्मात् एव उष्ट्रीपरिपालनात् अस्य कुटुम्बस्य भव्यं सञ्जातम् तत् किम् अन्येन व्यापारेण।" एवं विचिन्त्य गृहम् आगत्य प्रियाम् आह, "भद्रे! समीचीनः अयं व्यापारः। तव सम्मतिः चेत्, कुतोऽपि धनिकात् किञ्चित् द्रव्यम् आदाय मया करभानां ग्रहणाय गुर्जरदेशे गन्तव्यम्। तावत् त्वया एतौ यत्नेन रक्षणीयौ, यावत् अहम् अपराम् उष्ट्रीं नीत्वा समागच्छामि।"

५. ततश्च गुर्जरदेशे गत्वा, उष्ट्रीं गृहीत्वा स्वगृहम् आगतः। किम् बहुना, तेन तथा कृतं यथा तस्य प्रचुरा उष्ट्राः करभाश्च सम्मिलिताः। ततः तेन महत् उष्ट्रयूथ कृत्वा रक्षापुरुषो धृतः। तस्य वर्षं प्रति वृत्या करभम् एकं प्रयच्छति। अन्यच्च अहर्निशं तस्य दुग्धपानं निरूपितम्। एवं रथकारोऽपि नित्यम् एव उष्ट्री-करभव्यापारं कुर्वन् सुखेन तिष्ठति।

६. अथ, ते दासेरका अधिष्ठानोपवने आहारार्थं गच्छन्ति। कोमला वल्लीः यथेच्छया भक्षयित्वा, महति सरसि पानीयं पीत्वा सायंतनसमये मन्दं मन्दं लीलया गृहम् आगच्छन्ति। सच पूर्वदासेरकः मदस्य अतिरेकात् पृष्ठे आगत्य मिलति। ततः तैः करभैः अभिहितम्, "अहो, मन्दमतिः अयं दासेरकः, यथा यूथात् भ्रष्टः पृष्ठे स्थित्वा घण्टां वादयन् आगच्छति। यदि कस्यअपि दुष्टस्य सत्त्वस्य मुखे पतिष्यति, ततः नूनं मृत्युः भविष्यति।

७. तेषां तत् वनं गाहमानानां कश्चित् सिंहः घण्टायाः रवम् आकर्ण्य समायातः। यावत् अवलोकयति, तावत् उष्ट्रीदासेरकाणां यूथं गच्छति। एकस्तु पुनः पृष्ठे क्रीड़ां कुर्वन्, वल्लरीः चरन् यावत् तिष्ठति तावत् अन्ये दासेरकाः पानीयं पीत्वा स्वगृहे गताः। सोऽपि वनात् निष्क्रम्य यावत् दिशः अवलोकयति, तावत् न कञ्चित् मार्गं पश्यति, वेत्तिच। यूथात् भ्रष्टः मन्दं मन्दं बृहत् शब्दं कुर्वन् यावत् कियत् दूरं गच्छति, तावत् तच्छब्दानुसारी सिंहोऽपि क्रमं कृत्वा निभृतः अग्रे व्यव-

स्थितः । ततः, यावत् उष्ट्रः समीपम् आगतः, तावत् सिंहेन लम्फयित्वा ग्रीवायां गृहीतः ।

सतां वचनमादिष्टम् मदेन न करोति यः ।
स विनाशमवाप्नोति; घण्टोष्ट्र इव सत्वरम् ॥

## महाचतुरकस्य शृगालस्य

### कथा ( ११ )

१. कस्मिंश्चित् वने महाचतुरको नाम शृगालः आसीत् । तेन कदाचित् अरण्ये स्वयंमृतः गजः समासादितः । स तस्य समन्तात् परिभ्रमति परं, कठिनां त्वचं भेत्तुं न शक्नोति ।

२. अथ, अत्र अवसरे इतश्च इतश्च विचरन् कश्चित् सिंहः तत्रैव प्रदेशे समाययौ । अथ तं सिंहं समागतं दृष्ट्वा स करयुगलं संयोज्य सविनयम् उवाच, "स्वामिन् ! अहं त्वदीयः लागुडिकः अत्र स्थितः त्वदर्थे गजम् इमं रक्षामि । तत् एनं भक्षयतु स्वामी ।"

३. तं प्रणतं दृष्ट्वा सिंहः प्राह, "भोः ! न अहम् अन्येन हतं सत्त्वं कदाचित् अपि भक्षयामि । उक्तञ्च,

'वनेऽपि सिंहा मृगमांसभुक्ताः,
बुभुक्षिताः नैव तृणं चरन्ति ।
एवं कुलीना व्यसनाभिभूताः
न नीतिमार्गं परिलङ्घयन्ति ॥',

तत् तव एव अयं गजः मया प्रसादीकृतः । तत्

श्रुत्वा शृगालः सानन्दं प्राह, "युक्तम् इदं स्वामिनः निजभृत्येषु।"

४. अथ सिंहे गते कश्चित् व्याघ्रः समाययौ। तम् अपि दृष्ट्वा असौ व्यचिन्तयत्, "अहो! एकस्तावत् दुरात्मा प्रणिपातेन अपवाहितः। तत् कथं इदानीम् एनम् अपवाहयिष्यामि। नूनम्, शूरोऽयं, न खलु भेदं विना साध्यः भविष्यति।"

५. एवं सम्प्रधार्य तस्य अभिमुखो भूत्वा गर्वात् उन्नतकन्धरः ससम्भ्रमम् उवाच, "माम, कथम् अत्र भवान् मृत्योः मुखे प्रविष्टः। येन एष गजः सिंहेन व्यापादितः, स च माम् एतस्य रक्षणे नियुज्य नद्यां स्नानार्थं गतः। तेन च गच्छता मम समादिष्टम्, "यदि कश्चित् इह व्याघ्रः समायाति तत् त्वया सुगुप्तं मम आवेदनीयम्, येन वनम् इदं मया निर्व्याघ्रं कर्तव्यम्; यतः पूर्वं व्याघ्रेण एकेन, मया व्यापादितः गजः, भक्षयित्वा उच्छिष्टतां नीतः। तस्मात् दिनात् आरभ्य व्याघ्रान् प्रति प्रकुपितोऽस्मि"।

६. तत् श्रुत्वा व्याघ्रः संत्रस्त आह, "भो भागिनेय! देहि मे प्राणदक्षिणाम्, त्वया तस्य चिराय आयातस्य अपि मदीया काऽपिवार्ता न आख्येया"। एवम् अभिधाय सत्वरं पलायाञ्चक्रे।

७. अथ, गते व्याघ्रे कश्चित् द्वीपी समायातः। तम् अपि दृष्ट्वा असौ व्यचिन्तयत् "अयं चित्रकः दृढदंष्ट्रः। तत्, अस्य पार्श्वात् गजस्य यथा चर्मणः छेदो भवति, तथा करोमि।" एवं निश्चित्य तम् अपि उवाच, "भो भगिनीसुत! किमिति

चिरात् दृष्टोऽसि ? कथञ्च बुभुक्षित इव लक्ष्यसे ? तत् अतिथिः असि मे ! एष गजः सिंहेन हतः तिष्ठति । अहं च अस्य, तेन आदिष्टः रक्षपालः । परं तथापि यावत् सिंहः न समायाति, तावत् अस्य गजस्य मांसं भक्षयित्वा, तृप्तिं कृत्वा द्रुतं व्रज ।

८. स आह "माम ! यदि एवं, तत् न कार्यं मे मांसाशनेन । यतः 'जीवन् नरः भद्रशतानि पश्यति' । तत् अहम् इतः अपयास्यामि" । शृगाल आह "भो अधीर ! विश्रब्धः भूत्वा भक्षय त्वम् ! तस्य आगमनं दूरतोऽपि तव अहं निवेदयिष्यामि" । तथा अनुष्ठिते, द्वीपिना भिन्नां त्वचं विज्ञाय जम्बूकेन अभिहितम्, "भगिनीसुत ! गम्यताम्, एष सिंहः समायाति !" तत् श्रुत्वा चित्रकः दूरं प्रनष्टः ।

९. अथ, यावत् असौ किञ्चित् मांसं भक्षयति, तावत् अतिसंक्रुद्धः अपरः श्रृगालः समाययौ । अथ तम् आत्मतुल्यपराक्रमं दृष्ट्वा एनं श्लोकम् अपठत् ।

'उत्तमं प्रणिपातेन, शूरं भेदेन योजयेत्,
नीचमल्पप्रदानेन, समशक्तिं पराक्रमैः ।'

ततः स्वदंष्ट्राभिः तं विदार्य स्वयं चिरकालं हस्तिनो मांसं बुभुजे ।

## बककर्कटकयोः

### कथा ( १२ )

१. अस्ति कस्मिंश्चित् वने विविधैः जलचरैः अधिष्ठितं महत् सरः। तत्र च एको बकः, वृद्धभावम् उपागतः, मत्स्यान् व्यापादयितुम् असमर्थः प्रतिवसति। स कदाचित्, क्षुधया क्षामकण्ठः सरसः तीरे उपविष्टः, अश्रुप्रवाहैः धरातलम् अभिषिञ्चन् रुरोद।

२. एकः कुलीरकः, नानाजलचरैः सह समेत्य, तस्य दुःखेन दुःखितः सादरम् इदम् ऊचे, "माम ! किम् अद्य त्वया न भोजनं क्रियते ? केवलम् अश्रुपूर्णाभ्यां नेत्राभ्यां सनिःश्वासेन स्थीयते।" स आह, "वत्स ! सत्यम् उपलक्षितं भवता। मया हि मत्स्यानाम् अदनं प्रति वैराग्यतया प्रायोपवेशनं कृतम्, तेन अहं समीपम् आगतान् अपि मत्स्यान् न भक्षयामि !"

३ तत् श्रुत्वा कुलीरकः प्राह, "किंतस्य वैराग्यस्य कारणम् ?" स प्राह, "वत्स ! अहम् अस्मिन् सरसि जातः, वृद्धिं गतश्च। तत् मया एतत् श्रुतं, 'यत् द्वादशवार्षिकी अनावृष्टिः लग्ना सम्पद्यते'। तत्, एतत् सरः स्वल्पतोयं वर्तते। शीघ्रं शोषं यास्यति। अस्मिन् शुष्के, यैः सह अहं वृद्धिं गतः सदैव क्रीडितश्च, ते सर्वे तोयस्य अभावात् नाशं यास्यन्ति। तत् तेषां वियोगम् अहं द्रष्टुम् असमर्थः। तेन एतत् प्रायोपवेशनं कृतम्। साम्प्रतं सर्वेषां स्वल्पानां जलाशयानां जलचराः गुरुषु जलाशयेषु स्वैः स्वैः जनैः नीयन्ते। अत्र पुनः सरसि ये जलचराः, ते निश्चिन्ताः सन्ति तेन अहं विशेषात् रोदिमि, यत् बीजशेषमात्रम् अपि अत्र न उद्धरिष्यति।"

४. ततः स तत् आकर्ण्य, अन्येषाम् अपि जलचराणां तत् तस्य वचनं निवेदयामास । अथ, ते सर्वे भयेन संत्रस्ताः मत्स्यकच्छपप्रभृतयः तम् अभ्युपेत्य पप्रच्छुः, "माम ! अस्ति कश्चित् उपायः, येन अस्माकं रक्षा भवति ?" बक आह, "अस्ति अस्य जलाशयस्य समीपं, प्रभूतजलं, पद्मिनीभिः मण्डितं सरः, यत् चतुर्विंशत्या अपि वर्षाणाम् अवृष्ट्या न शोषम् एष्यति । तत्, यदि कश्चित् मम पृष्ठम् आरोहति, तत् अहं तत्र नयामि ।"

५. अथ, ते तत्र विश्वासम् आपन्नाः "तात, मातुल, भ्रातः" इति ब्रुवाणाः "अहं पूर्वम्, अहं पूर्वम्" इति समन्तात् परितस्थुः । सोऽपि दुष्टाशयः क्रमेण तान् पृष्ठे आरोप्य जलाशयस्य नातिदूरे शिलां समासाद्य, तस्याम् आक्षिप्य, स्वेच्छं भक्षयित्वा, भूयोऽपि जलाशयं समासाद्य, जलचराणां मिथ्यावार्ताभिः मनांसि रञ्जयन् नित्यम् एव आहारवृत्तिं करोति ।

६. अन्यस्मिन् दिने च कुलीरकेण उक्तम् "मया सह ते प्रथमः स्नेहसम्भाषः सञ्जातः । तत्, किं मां परित्यज्य अन्यान् नयसि ? तस्मात् अद्य मे प्राणानां त्राणं कुरु ।" तत् आकर्ण्य सोऽपि दुष्टाशयः चिन्तितवान्, "निर्विण्णोऽहं मत्स्यानां मांसस्य अदनेन । तत् अद्य एनं कुलीरकं व्यञ्जनस्य स्थाने करोमि ।" इति विचिन्त्य तं पृष्ठे समारोप्य, तां वध्यशिलाम् उद्दिश्य प्रस्थितः ।

७. कुलीरकोऽपि दूरात् एव अस्थिपर्वतं शिलायाः समीपम् अवलोक्य, मत्स्यानाम् अस्थीनि परिज्ञाय तम् अपृच्छत्, "माम !

कियद्दूरे स जलाशयः । मम भारेण अतिश्रान्तः त्वम् । तत् कथय । ” सोऽपि मन्दधीः “जलचरोऽयम्” इति मत्वा “स्थले न प्रभवति” इति सस्मितम् इदम् आह, “कुलीरक ! कुत्र अन्यो जलाशयः ? मम प्राणयात्रा इयम्, तस्मात् स्मर्य्यताम् आत्मनः अभीष्टा देवता, त्वाम् अपि अस्यां शिलायां निक्षिप्य भक्षयिष्यामि” इति उक्तवति तस्मिन् कुलीरकेण स्ववदनदंष्ट्राभ्यां मृदुग्रीवायां गृहीतः, मृतश्च ।

८. अथ स तां वकस्य ग्रीवां समादाय शनैः शनैः तं जलाशयम् आससाद । ततः, सर्वैः एव जलचरैः पृष्टः, “भोः कुलीरक ! किं त्वं निवृत्तः ? स मातुलोऽपि न आयातः । तत् किं चिरयति । वयं सोत्सुकाः तिष्ठामः ।” एवं तैः अभिहिते कुलीरकोऽपि विहस्य उवाच, “मूर्खाः सर्वे जलचराः, तेन मिथ्यावादिना वञ्चयित्वा नातिदूरे शिलातले प्रक्षिप्य भक्षिताः । तत् मया आयुषःशेषतया तस्य विश्वासघातकस्य अभिप्रायं ज्ञात्वा इयं ग्रीवा आनीता । तत्, अलं सम्भ्रमेण । अधुना सर्वेषां जलचराणां क्षेमं भविष्यति ।”

भक्षयित्वा बहून् मत्स्यान्, उत्तमाधममध्यमान् ।
अतिलौल्याद्व वकः कश्चिन् मृतः कर्कटकग्रहात् ॥

---

## मत्कुणस्य यूकायाश्च

### कथा [ १३ ]

१. अस्ति, कस्यचित् महीपतेः, कस्मिंश्चित् स्थाने मनोरमं शयनस्य स्थानम् । तत्र शुक्लयोः पटयोः मध्ये संस्थिता, मंदविसर्पिणी नाम श्वेता यूका प्रतिवसति । सा च, तस्य महीपतेः

रक्तम् आस्वादयन्ती सुखेन कालं नयमाना तिष्ठति। अन्येद्युश्च, तत्र शयनस्थाने कुतश्चित् भ्राम्यन्, अग्निमुखो नाम मत्कुणः समायातः।

२. अथ, तं दृष्ट्वा सा विषण्णवदना प्रोवाच, "भोः अग्निमुख! अत्र अनुचिते स्थाने त्वं कुतः समायातः? तत्, यावत् न कश्चित् वेत्ति, तावत् शीघ्रं गम्यताम्।" स आह, "भगवति! गृहम् आगतस्य असाधोरपि न एतत् युज्यते वक्तुम्। उक्तञ्च,

'एह्यागच्छ, समाश्वसासनमिदम्, कस्माच्चिराद् दृश्यसे?
का वार्ता? ननु दुर्बलोऽसि, कुशलम्? प्रीतोऽस्मि ते दर्शनात्।
एवं नीचजनेऽपि युज्यति गृहं प्राप्ते सतां सर्वदा,
धर्मोयं गृहमेधिनां निगदितः, स्मार्तैर्लघुः सर्वदा॥

३. "अपरं, मया अनेकेषां मानुषाणां विविधानि रुधिराणि आस्वादितानि, कटुतिक्तकषायाम्लरसास्वादनानि। तत् यदि त्वं प्रसादं करोषि तर्हि, अस्य नृपतेः शरीरे विविधानां व्यञ्जनानाम् अन्नपानचोष्यलेह्यानाञ्च आहारवशात् यत् मिष्टं रक्तं सञ्जातं, तस्य आस्वादनेन जिह्वायाः सौख्यं सम्पादयामि। तत् मया तव गृहम् आगतेन, बुभुक्षया पीड्यमानेन तव सकाशात् भोजनम् अर्थनीयम्। तत् न त्वया एकाकिन्या अस्य नृपतेः भोजनं कर्तुं युज्यते।"

४. तत् श्रुत्वा मन्दविसर्पिणी प्राह, "भो मत्कुण! अहं निद्रावशं गतस्य अस्य नृपते रक्तम् आस्वादयामि। तत् त्वं पुनः, अग्निमुखः चपलश्च। तत् यदि मया सह

रक्तस्य पानं करोषि तत् तिष्ठ, अभीष्टतरं रक्तम् आस्वादय । सोऽब्रवीत्, "भगवति ! एवमेव करिष्यामि । यावत् त्वं प्रथमं नृपस्य रक्तं न आस्वादयसि, तावत् मम देवगुरुकृतः शपथः स्यात्, यदि तत् आस्वादयामि"।

५. एवं, तयोः परस्परं वदतोः, स राजा तत् शयनम् आसाद्य प्रसुप्तः । अथ, असौ मत्कुणो जिह्वालौल्यात् जाग्रतम् अपि तं महीपतिम् अदशत् । अथवा साधु इदम् उच्यते'

"स्वभावो नोपदेशेन शक्यते कर्तुमन्यथा;
सुतप्तमपि पानीयं पुनर्गच्छति शीतताम् ॥"

६. अथ, असौ नृपतिः सूच्यग्रेण विद्ध इव, तत् शयनं त्यक्त्वा तत्क्षणादेव उत्थितः । "अहो ! ज्ञायताम्' अत्र प्रच्छादनपटे मत्कुणो, यूका वा नूनं तिष्ठति, येन अहं दष्टः" अथ ये कञ्चुकिनः तत्र स्थिताः' ते सत्वरं प्रच्छादनपटं गृहीत्वा सूक्ष्मया दृष्ट्या वीक्षांचक्रुः । अत्रांतरे, स मत्कुणः चापल्यात् खट्वान्तं प्रविष्टः, सा मंदविसर्पिणी तु वस्त्रसंधेः अंतर्गता तैः दृष्टा, व्यापादिता च ।

नह्यविज्ञातशीलस्य प्रदातव्यः प्रतिश्रयः;
मत्कुणस्य हि दोषेण हता मन्दविसर्पिणी ।

———

# काकादीनां क्रथनकस्य च

## कथा (१४)

१. कस्मिंश्चित् वनोद्देशे मदोत्कटो नाम सिंहः प्रतिवसतिस्म। तस्य च अनुचराः अन्ये द्वीपि-वायसगोमायवः सन्ति। अथ, कदाचित् तैः इतस्ततः भ्रमद्भिः सार्थात् भ्रष्टः क्रथनको नाम उष्ट्रः-दृष्टः। अथ, सिंह आह, "अहो! अपूर्वम् इदं सत्त्वम्, तत् ज्ञायतां किम् एतत् आरण्यकं ग्राम्यं वा।" तत् श्रुत्वा वायस आह "भोः स्वामिन्! ग्राम्यः अयम् उष्ट्रनामा जीवविशेषः, तव भोज्यः। तत् व्यापाद्यताम्।" सिंह आह, "नाहं गृहम् आगतं हन्मि।" तत्, अभयप्रदानं दत्वा मम सकाशम् आनीयताम्, येन, अस्य आगमनस्य कारणं पृच्छामि।"

२. अथ, असौ सर्वैरपि विश्वास्य, अभयप्रदानं दत्वा मदोत्कटस्य सकाशम् आनीतः; प्रणम्य उपविष्टश्च। ततः, तस्य पृच्छतः, तेन सार्थभ्रंशसमुद्भव आत्मनो वृत्तान्तो निवेदितः। ततः, सिंहेन उक्तम् "भोः क्रथनक! मा त्वं ग्रामं गत्वा भूयोऽपि भारस्य उद्वहनेन कष्टं प्राप्नुहि। तत्, अत्र एव अरण्ये निर्विशङ्कः मरकतसदृशानि शष्पाग्राणि भक्षयन्, मया सह सदैव वस।" सोऽपि तथा इति उक्त्वा, तेषां मध्ये विचरन् न कुतोऽपि भयम् इति सुखेन आस्ते।

३. अन्येद्युः, मदोत्कटस्य अरण्यचारिणा महागजेन सह युद्धम् अभवत्। ततः तस्य दन्तमुशलयोः प्रहारेण व्यथा सञ्जाता। व्यथितः कथमपि प्राणैः न वियुक्तः। अथ, शरीरस्य असमर्थ-

त्वात् न कुत्रचित् पदात् पदम् अपि चलितुं शक्नोति । ते अपि सर्वे काकादयः अप्रभुत्वेन क्षुधाऽऽविष्टाः परं दुःखं भेजुः । अथ, तान् सिंह, आह, "भोः ! अन्विष्यतां कुत्रचित् किञ्चित् सत्त्वम् । येन अहम् एताम् अपि दशां प्राप्तः, तत् हत्वा युष्माकं भोजनं सम्पादयामि ।"

४. अथ, ते चत्वारोऽपि भ्रमितुम् आरब्धाः । यावत् न किञ्चित् सत्त्वं पश्यन्ति, तावत् वायसशृगालौ परस्परं मन्त्रयतः । शृगाल आह, भो वायस ! किम् प्रभूतेन भ्रान्तेन ? अयम् अस्माकं प्रभोः विश्वस्तः क्रथनकः तिष्ठति । तत्, एनं हत्वा प्राणयात्रां कुर्मः ।" वायस आह "युक्तम् उक्तं भवता; परं, स्वामिना एतस्य अभयप्रदानं दत्तम् आस्ते । न वध्यः अयम् ।" शृगाल आह, "भो वायस ! अहं स्वामिनं विज्ञाप्य तथा करिष्ये, यथा स्वामी वधं करिष्यति । तत्, तिष्ठन्तु भवन्तः अत्रैव, यावत् अहं गृहं गत्वा, प्रभोः आज्ञां गृहीत्वा च आगच्छामि ।" एवम् अभिधाय सत्वरं सिंहम् उद्दिश्य प्रस्थितः ।

५. अथ, सिंहम् आसाद्य इदम् आह, "स्वामिन् ! समस्तं वनं भ्रान्त्वा वयम् आगताः, न किञ्चित् सत्त्वम् आसादितम् । तत्, किं कुर्मः वयम् । सम्प्रति, वयं बुभुक्षया पदम् एकम् अपि प्रचलितुं न शक्नुमः । देवोऽपि पथ्याशी वर्तते । यदि देवस्य आदेशः भवति, तत् क्रथनकस्य पिशितेन अद्य पथ्यक्रिया क्रियते ।"

६. अथ सिंहः, तत् दारुणं वचनम् आकर्ण्य सकोपम् इदम् आह, "धिक् पापाधम ! यदि एवं भूयः वदसि, तत्, त्वां तत्-

क्षणात् एव वधिष्यामि । मया तस्य अभयं प्रदत्तम्, तत् कथं व्यापादयामि ।"

७. तत् श्रुत्वा शृगालः प्राह, "स्वामिन् ! यदि अभयप्रदानं दत्त्वा वधः क्रियते, तदा एष दोषो भवति, यदि तु स जीवितव्यं प्रयच्छति, तत् न दोषः । ततः, यदि पुनः देवपादानां भक्त्या स आत्मानं वधाय नियोजयति, तत् बध्यः; अन्यथा अस्माकं मध्यात् एकतमः बध्यः, यतः देवपादाः पथ्याशिनः, क्षुधाया निरोधात् अन्त्यां दशां यास्यन्ति । अपरं, पश्चात् अपि अस्माभिः वह्नौ प्रवेशः कार्यः, यदि स्वामिपादानां किंचित् अनिष्टं भविष्यति । उक्तञ्च,

'यस्मिन् कुले यः पुरुषः प्रधानः,
स सर्वयत्नैः परिरक्षणीयः ।' "

तत्श्रुत्वा मदोत्कटः प्राह, "यदि एवं, तत् कुरुष्व यत् रोचते ।"

८. तत् श्रुत्वा स सत्वरं गत्वा तान् आह, "भोः ! स्वामिनः महती अवस्था वर्तते तत् किं पर्यटितेन ! तेन विना कः अत्र अस्मान् रक्षयिष्यति ? तत् गत्वा तस्य क्षुद्रोगात् परलोकं प्रस्थितस्य आत्मशरीराणां दानं कुर्मः, येन स्वामिनः प्रसादस्य अनृणतां गच्छामः ।" तदनन्तरं ते सर्वे बाष्पपूरितदृशः मदोत्कटं प्रणम्य उपविष्टाः । तान् दृष्ट्वा मदोत्कट आह, "भोः ! प्राप्तं, दृष्टं वा किञ्चित् सत्त्वम् ?"

९. अथ, तेषां मध्यात् काकः प्रोवाच, "स्वामिन् ! वयं तावत् सर्वत्र पर्यटिताः। परं, न किञ्चित् सत्वम् आसादितं दृष्टं वा। तत्, अद्य मां भक्षयित्वा प्राणान् धारयतु स्वामी, येन देवस्य आश्वासनं भवति, मम पुनः स्वर्गप्राप्तिः,

'स्वाम्यर्थं यस्त्यजेत् प्राणान् भृत्यो भक्तिसमन्वितः।
परं स पद माप्नोति, जरामरणवर्जितम्।"

१०. तत् श्रुत्वा शृगाल आह, "भोः ! स्वल्पकायः भवान्। तव भक्षणात् स्वामिनः तावत् प्राणयात्रा न भवति, अपरः दोषश्च समुत्पद्यते। उक्तं हि,

'काकमांसं, शुनोच्छिष्टं, स्वल्पं, तदपि दुर्लभम्,
भक्षितेनापि किं तेन ? तृप्तिर्येन न जायते॥

तत्, दर्शिता स्वामिभक्तिः भवता, गतश्च आनृण्यं भर्तृपिण्डस्य, प्राप्तश्च, उभयलोके साधुवादः। तत्, अपसर अग्रतः। अहं स्वामिनं विज्ञापयामि।" तथा अनुष्ठिते शृगालः प्रणम्य उपविष्टः, "स्वामिन् ! मां भक्षयित्वा अद्य प्राणयात्रां विधाय, मम उभयलोकप्राप्तिं कुरु।"

११. अथ, तत् श्रुत्वा द्वीपी आह, "भोः साधु उक्तं भवता पुनः भवान् अपि स्वल्पकायः, स्वजातिश्च। नखायुधत्वात्, अभक्ष्य एव। तत्, दर्शितं त्वया आत्मनः कौलीन्यम्। तत्, अपसर अग्रतः, येन अहं स्वामिनं विज्ञापयामि।" तथा अनुष्ठिते द्वीपी प्रणम्य मदोत्कटम् आह स्वामिन् ! क्रियताम् अद्य मम

प्राणैः प्राणयात्रा । दीयताम् अक्षयः वासः स्वर्गे । मम विस्तार्यतां क्षितितले प्रभूततरं यशः । तत्, अत्र विकल्पः न कार्यः ।"

१२. तत् श्रुत्वा क्रथनकः चिन्तयामास, "एतैः तावत् समस्तैः अपि शोभनानि वाक्यानि प्रोक्तानि, न च एकोऽपि स्वामिना विनाशितः । तावत् अहम् अपि प्राप्तकालः विज्ञापयामि येन मम वचनम् एते त्रयोऽपि समर्थयन्ति ।" इति निश्चित्य प्रोवाच "भोः ! सत्यम् उक्तं भवता । परं, भवान् अपि नखायुधः, तत् कथं स्वामी भवन्तं भक्षयति । तत्, अपसर अग्रतः, येन अहं स्वामिनं विज्ञापयामि" । तथा अनुष्ठिते क्रथनकः अग्रे स्थित्वा प्रणम्य उवाच, "स्वामिन् ! एते तावत् अभक्ष्या भवताम् । तत् मम प्राणैः प्राणयात्रा विधीयताम्, येन मम उभयलोकप्राप्तिः भवति ।"

१३. एवम् अभिहिते, शृगालचित्रकाभ्यां विदारितोभयकुक्षिः क्रथनकः, प्राणान् अत्याक्षीत् ।

बहवः पण्डिताः क्षुद्राः सर्वे मायोपजीविनः
कुर्युः कृत्यमकृत्यं वा; उष्ट्रेकाकादयो यथा ।

॥ इति ॥

——:०:——

# कठिनपदानां वाक्यानाञ्च विवरणम् ।

| पृष्ठम् | अङ्कः | | |
|---|---|---|---|
| १ | १ | दारिद्र्योपेतः | निर्धनः |
| ” | २ | वार्द्धकभावे | वृद्धावस्थायाम् |
| ” | २ | आत्मविचेष्टितम् | आत्मनः कृत्यम् |
| ” | २ | स्मरसि | स्मरिष्यसि |
| ” | ३ | आसादितम् | प्राप्तम् |
| २ | ४ | वनगहने | वनस्य गह्वरे |
| ” | ४ | तन्मात्रम् | यावदिष्यते, तावदेव |
| ” | ६ | सीदामः | क्लेशं प्राप्नुमः |
| ” | ७ | भूयोपि | ( खनित्वा ) पुनरपि |
| ” | ७ | राजकुले | न्यायालये |
| ३ | ८ | धर्माधिकरणम् | न्यायालयः |
| ” | ८ | प्रो ·········न्तौ | चौर्यरूपं दोषं परस्परमारोपयन्तौ स्वकीयमभियोगं निवेदितवन्तौ । |
| ” | ८ | धर्मा·········शैः | न्यायालयाध्यक्षैः |
| ” | ८ | दिव्यार्थे | शपथाय |
| ” | ८ | दृष्टः | विचारितः |

| | | | |
|---|---|---|---|
| " | ६ | परिण……ति | अस्माकं भविष्यति |
| " | ६ | प्रोद्य | साद्यं दत्त्वा |
| " | ९ | सत्यश्रावणम् | "किमेतत्सत्यम् ?" इत्येवं श्रावयित्वा यदा पृच्छामि । |
| " | १० | निग्रहं | दण्डम् |
| ४ | २ | शिशुवैराग्यात् | शिशुहेतोरुद्भूताद् वैराग्यात् |
| " | २ | कुलीरकः | "केकड़ा,, इत्यार्यभाषायां प्रसिद्धो जलचरः |
| ५ | ३ | सत्यानृतम् | सत्येन युक्तमनृतम् |
| " | ४ | प्रक्षिप | क्षिप, विस्तारय |
| " | १ | अन्तःपुरे | यत्र राज्ञां स्त्रीजनो निवसति तत्र |
| " | १ | विश्वासस्थानम् | विश्वासपात्रम् |
| " | १ | मुहुर्मुहुः | वारं वारम् |
| ६ | २ | शितधारेण | तीक्ष्णेन |
| " | ३ | पूर्व……न | पूर्वजन्मनः संस्काराणां वशात् |
| " | ४ | चेटितम् | हृतम् |
| ७ | ५ | ध्वांक्षाः | काकाः |
| " | ९ | किराताः | वननिवासिनो लुण्टकाः |
| " | ६ | मोचयित्वा | उत्तार्य |
| " | ७ | मुञ्चामि | मोचयामि |

| | | | |
|---|---|---|---|
| ८ | १ | वीर्य्यातिरेकात् | बलस्योन्मादात् |
| " | २ | सारङ्ग…… | सारङ्गो हरिणः |
| " | २ | समयधर्मः | नियमव्यवस्था |
| " | ३ | प्राणयात्रा | प्राणरक्षा |
| " | ४ | श्वापदः | पशुः |
| ६ | ५ | निर्वृतिभाजः | निश्चिन्ताः |
| " | ६ | भव्यः | उत्तमः |
| " | ७ | क्षुत्……………ण्ठः | क्षुधया शुष्यत्कण्ठः |
| " | ७ | सृ……………लिहत् | ओष्ठप्रान्तौ दन्तैश्चर्वयन् |
| " | ८ | निपात्य | निहत्य |
| १० | ६ | प्रस्तावम् | आगमनावसरम् |
| " | ११ | विष्कम्भिताः | अवरुद्धाः |
| ११ | १ | मत्स्यजीविभिः | ये मत्स्यादीनेव विक्रीय स्वकीयामाजीविकां कुर्वन्ति, तैः, |
| १२ | २ | कुलि……………भम् | विद्युत्पातोपमम् |
| १३ | ५ | परिजनेन | परिवारेण |
| " | १ | सारमेयाः | कुक्कुराः |
| " | ३ | अपूर्वम् | विलक्षणम् |
| " | ३ | सिंह……………तपः | द्वीपी, चित्रकः ( चीता ) वृकः कुक्कुराकारो हिंसकः पशुः ( भेड़िया ) |

| | | | |
|---|---|---|---|
| १४ | ३ | समन्तात् | सर्वासु दिक्षु |
| " | ४ | प्रभुत्वे | स्वामिपदे |
| " | ५ | छत्रच्छायायाम् | ममाधीनम् |
| " | ५ | अर्धचन्द्रम् | गलहस्तम् |
| १५ | ६ | पुलकिततनुः | प्रफुल्लशरीरः |
| " | ७ | वाहिताः | छलिताः |
| " | १ | कृत……ग्रहः | यो नियमेनाग्निहोत्रं विदधाति, सः |
| " | १ | पशुम् | गाम् ( हवनार्थं दुग्धाद् घृत-निष्पादनाय ) |
| १६ | २ | हिम………यते | शैत्यं नाशयते |
| " | ४ | वल्लभः | प्रियः |
| " | ५ | स्तोकम् | किञ्चित् |
| १७ | ५ | सचेलम् | सवस्त्रम् |
| " | १ | निस्तब्धः | निश्चेष्टः |
| १८ | ३ | समयः | प्रतिज्ञा |
| " | ४ | प्रवर्तते……च | क्रिया न प्रवर्तन्तेवाणीचा-पि न प्रवर्तते |
| १९ | २ | पथ्यंकुरु | भोजनेन हितं सम्पादय |
| २० | ४ | ज्येष्ठ……ज्ञात् | ज्येष्ठभ्रातुःपलायनात् |
| " | ५ | परुषतराणि | कठोराणि |
| २१ | ७ | स्व……भव | शृगालेष्वेव गत्वा निवस |
| " | १ | दारिद्र्योपहतः | निर्धनतारूपेणदुःखेन दुःखितः |
| " | १ | अधिष्ठाने | स्थाने |

| | | | |
|---|---|---|---|
| २२ | २ | दासेरकेण | उष्ट्रीशिशुना |
| ,, | ४ | भव्यम् | कल्याणम् |
| ,, | ४ | कलभानाम् | दासेरकाणाम् |
| २३ | ६ | अधिष्ठानोपवने | समीपस्थे वने |
| ,, | ७ | गाहमानानाम् | भ्रमताम् |
| ,, | ७ | निभृतः | गुप्तः |
| ,, | ७ | लम्फयित्वा | कूर्दित्वा |
| २४ | २ | लागुडिकः | लगुडधारी |
| ,, | ३ | मृग......भुक्ताः | मृगमांसभोजिनः |
| २५ | ४ | अपवाहितः | दूरीकृतः |
| ,, | ६ | भागिनेयः | भगिनीसुतः |
| ,, | ७ | द्वीपी | चित्रकः |
| ,, | ७ | रक्षपालः | लागुडिकः(रक्ष्यंवस्तु पालयतीति) |
| २६ | ८ | विश्रब्धः | विश्वस्तः |
| ,, | ८ | प्रनष्टः | प्रधावितः |
| २७ | १ | कर्कटकः | कुलीरकः |
| ,, | १ | अभिषिञ्चन् | आर्द्रयन् |
| ,, | २ | माम | मातुल ( सामान्यतः वयोवृद्धसम्बोधनम् ) |
| ,, | २ | उपलक्षितम् | अवबुद्धम् |
| ,, | ३ | प्रायोपवेशनम् | उपवासः |
| ,, | ३ | उद्धरिष्यति | बीजमात्रमपि नावशिष्टं स्थास्यति |

| | | | |
|---|---|---|---|
| २८ | ४ | तात | सामान्यतो वयोवृद्धसम्बोधनम् |
| ,, | ५ | नित्या……ति | नित्यं तथैवाहारवृत्या जीवति |
| ,, | ६ | स्नेहसम्भाषः | स्नेहालापः |
| ,, | ६ | निर्विण्णः | खिन्नः |
| ३० | २ | गृहमेधिनाम् | गृहस्थानाम् |
| ,, | ३ | अन्न……नाञ्च | अन्नं गोधूमादि, पानंदुग्धादि, चोष्यमाम्रादि, लेह्यं चटनी-त्यादि प्रसिद्धम् |
| ३१ | ४ | देवगुरुकृतः | ईश्वरगुरुकृतः |
| ,, | ६ | कञ्चुकिनः | राज्ञामन्तःपुरसेवकाः |
| ३२ | २ | सार्थ……द्भवः | स्वयूथाद् भ्रष्टत्वयोत्पन्नः |
| ,, | २ | मरकतसदृशानि | हरितानि |
| ,, | ३ | दन्तमुशलयोः | मुशलसदृशयोर्दन्तयोः |
| ३३ | ५ | पथ्याशी | क्षुधाविष्टः ? |
| ,, | ५ | पथ्यक्रिया | क्षुन्निवृत्तिः |
| ३४ | ७ | अन्त्यां दशाम् | मृत्युम् |
| ,, | ८ | महती अवस्था | अतिदुर्दशा |
| ,, | ८ | स्वामिनः प्रसादस्य | अद्य यावत् स्वामिना कृतायाः कृपायाः |
| ३६ | १३ | मायोपजीविनः | कपटिनः |

॥ इति ॥